वलिं दद्यान्नैवेद्यं हारीतिमग्रपिण्डकम् ।
महाफलोपभोग्याय उत्सृष्टं पञ्चमं ददेत् ॥

इति। तदनु आचमनादिकं कृत्वा परिशुद्धबुद्धिविशिष्टसुखसमन्वागतसर्व्वसत्त्वहित[ईक]सुखाय इदं चिधाऽऽवर्त्तयेत्—

राजा दानपतिश्चैव ये चान्ये सत्त्वराशयः ।
प्राप्नुवन्तु सदा सौख्यमायुरारोग्यसम्पदः ॥

इति। तदनु परिशुद्धकायवाङ्मनःकर्म्मा यथेच्छं विहरेत्। अनन्तरं उपविश्य जातकनिदानोक्तदानकथया कल्याणमित्रैः सह गतैर्वा सार्द्धं दिनमनुदिनं वाऽतिवाहयेत्। ततो विकालसन्ध्यायामपि ध्यानजपसंस्तवादिकं यथाधिगमाखिन्नमानसं कुर्य्यात्। युगकारादिमन्त्रेण दत्तबलिर्योगनिद्रया सुप्यात्। उपासकशब्दः कथं ज्ञातव्यः ? [उ, इति]—

उद्युक्तो बुद्धपूजायां उपशान्तोपशायकः ।
उपकाराय सत्त्वानां उपायेनान्वितो भवेत् ॥

पा, इति—

पापानावर्जयेन्नित्यं पापिष्ठैः सह सङ्गतिम् ।
पापान्निवारयन् जन्तोः पापं सर्व्वञ्च देशयेत ॥

स, इति—

समारोपविनिर्मुक्तः समाधौ सुसमाहितः ।
सर्व्वदा परमानन्दी सम्बोधिं साधयेद् बुधः ॥

क, इति—

करोति सर्व्वदा यत्नं करुणां परिपालयेत् ।
कष्टेनापि न चानिष्टं करोत्युपकृतिं पराम् ॥

इति वचनात्।

अक्षरचतुष्टयान्वितोऽयमुपासकः परिहृताकुशलकर्म्मा उपचितपुण्यसम्भारो[६]ऽभ्यासवशात् जाग्रद्दशावत् स्वप्नेऽपि कुशलान्येव करोति।

प्रतिबिम्बनिभं पश्यन् जगत् शुद्धमनाविलम्।
5 मायापुरुषवत् सर्व्वं कुर्य्यादनुपलम्भतः॥

अतश्चावैवर्त्तिक इत्यभिधीयते। एवमहोरात्रं सततसमितं पुण्यसम्भारमुपार्ज्जयन् आबोधिमण्डपर्य्यन्तं सत्त्वहितहेतोः सन्तिष्ठेत्।

नाम्ना गगनगर्भोऽसौ मध्यमार्थपरायणः(पञ्चः)।
10 समादानं करोत्येव आदिकर्म्म समाहितः॥

वज्रपीठात् समायातो विप्रजन्यः सदाशयः।
तस्याभ्यर्थनया चैतदादिकर्म्म कृतं मया॥

इह हि गगनगर्भाभ्यर्थनातो मयोक्तः
कतिपयपदमात्रेणादिकर्म्माभिधानतः।
15 अघतिमिरमपास्य क्लेशनिर्घात एष
अचिरममलबुद्धेर्बोधयेऽभ्यासतः स्यात्॥

आदिकर्म्म विधायैतत् यदलाभि शुभं मया।
आदिकर्म्म विधायैतदुत्कृष्टं लभतां जगत्॥

॥ कुदृष्टिनिर्घातनं समाप्तमिति॥

20 तत्रावस्थाः त्रयः— हेत्ववस्था नाम बोधिचित्तात् प्रभृति बोधिमण्डनिवेदनं यावत्। फलावस्था नाम सम्यक्सम्बोधिज्ञानोत्पत्तौ सर्व्वक्लेशगुणप्रहाणिप्राप्त्यवस्था। सत्त्वार्थक्रियावस्था नाम [७क] प्रथमधर्म्मचक्रप्रवर्त्तनात् प्रभृति आशासनान्तर्धानं यावत्।

तत्र हेत्ववस्था त्रिविधा; आशयावस्था, प्रयोगावस्था, वसितावस्था चेति। तत्र आशयावस्था सत्त्वानिर्मोक्ष-प्रणिधानम्। तद्धेत[व]श्चत्वारः तद्यथा—

गोत्र-सन्मित्रकारुण्य-दुःखाभीरुत्वहेतवः।
चतुर्भिर्प्रत्ययैरेभिर्बोधिचित्तं प्रजायते॥

इति वचनात्। दशभिरर्थैराशयावस्था। तत्र प्रयोगो द्विधा। अधिमुक्तिचित्तस्य पारमिताः सप्त। तत्र अधि-मुक्तिचरितस्य पारमिता दश—

दानं शीलं क्षमा वीर्य्यं ध्यानं प्रज्ञा उपायता।
प्रणिधानं बलं ज्ञानं मताः पारमिता दश॥

भूमिप्राप्तस्य चतसृभिः सम्पद्भिः सम्पन्नं आशयप्रयोग-प्रतिग्राहकदेयसम्पद्भिरिति दानं शीलं क्षान्तिवीर्य्यं ध्यानं प्रज्ञा उपायः— एताः सप्त पारमिताः। अधिमुक्ति-चर्य्याचरितपारमिताभ्यो विशिष्यत [८] इति द्विविधा प्रयोगावस्था।

तत्र वसिताः पञ्च, तद्यथा— क्लेश, उपपत्ति, कर्म्म, उपाय, सत्त्वपरिपाकावस्था चेति।

तत्र हेत्ववस्थास्थितेन सर्व्वमादिकर्म्म कर्त्तव्यम्। फला-वस्थासत्वार्थक्रियावस्थास्थितस्य च शाक्यमुनेरिव अना-भोगेन आदिकर्म्म प्रवर्त्तत एव इति। विस्तरेण कुदृष्टि-निर्घाते ज्ञेयम्।

॥ कुदृष्टिनिर्घातादिवाक्यटिप्पिनिकेयं श्रीमत्पण्डिताव-धूताद्वयवज्रपादानां कृतिरियम्॥

---

## २। मूलापत्तयः स्थूलापत्तयः।

अप्रतिष्ठितनिर्व्वाणं जगदानन्दसुन्दरम्।
नत्वा मञ्जुश्रियं वक्ष्ये मूलापत्तीश्चतुर्द्दश॥
आचार्य्येष्ववमानेन सुगताज्ञाविलङ्घने।
द्वेषात् गोत्रगुणाख्याने महामैत्रीविवर्ज्जने॥
5 बोधिचित्तपरित्यागे यानत्रितयनिन्दने।
गुह्याख्याने जने पक्वे जिनात्मस्कन्धदूषणे॥
शुद्धात्मधर्म्मसन्देहे दुष्टमैत्रीविरागतः।
धर्म्मेष्वनद्वयारोपे श्राद्धचित्तप्रदूषणे॥
समयासेवने प्राप्तौ प्रज्ञात्मस्त्रीप्रदूषणे।
10 मूलापत्ति[र्भ्व]र्भवेत् तेन मन्त्रिणः समयक्षतिः॥
तत्कृतौ सिद्धयो न स्युर्मारो दुःखस्य सञ्चयः।
निरयगतिं च भुंक्तेऽसौ तीव्रा विविधवेदनाः॥
गुरोर्यथाऽऽप्तितः पूजां विधाय मण्डले ततः।
गृह्णीयात् बोधिचित्तं च रत्नत्रयादिसम्बरम्॥
15 ॥ मूलापत्तयः समाप्ताः॥

विद्याया[ः] सेवने प्रीत्या समयानामयोगतः।
गणचक्रे विवादं च गुह्यधर्म्मप्रकाशनात्॥
श्राद्धसत्त्वेषु सद्धर्म्मदेशना अन्यथा भ्रमात्।
सप्ताहं वसन्मध्ये श्रावकानां महत्क्षते (?)॥
20 योगात् पति[त]श्चेत् योग्यभाजने गुह्यदेशनात्।
स्थूलापत्तिर्भवेत् तेन योगिनः सम्बरक्षतिः॥
पूजयित्वा महाचार्य्यं यथाशक्त्युपचारतः।
अप्रतिच्छन्नचित्तेन देशयेत् तु क्षतौ व्रती॥

॥ स्थूलापत्तयः समाप्त[ाः]॥

# ३। तत्त्वरत्नावली।

नमः श्रीवज्रसत्त्वाय।

प्रणम्य वज्रसत्त्वस्य चरणाम्भोरुहद्वयम्।
तत्त्वरत्नावलीं ब्रूमः शरच्चन्द्रामलद्युतेः॥
सदाम्नायपरिभ्रष्ट(भ्रत्स)तमोहृतदृशामियम्।
तत्त्वरत्नावली सम्यक् [८] पुंसां तत्त्वप्रकाशिनी॥

5 तत्र त्रीणि यानानि, श्रावकयानं प्रत्येकयानं महायानं चेति। स्थितयश्चतस्रः, वैभाषिक-सौत्रान्तिक-योगाचार-मध्यमकभेदेन। तत्र वैभाषिकस्थित्या श्रावकयानं प्रत्येकयानं च व्याख्यायते। महायानं च द्विविधम्, पारमितानयो मन्त्रनयश्चेति। तत्र यः पारमितानयः सौत्रा-
10 न्तिक-योगाचार-मध्यमकस्थित्या व्याख्यायते। मन्त्रनयस्तु योगाचार-मध्यमकस्थित्या व्याख्यानयते। योगाचारश्च द्विविधः, साकार-निराकारभेदेन। एवं माध्यमिकोऽपि मायोपमाद्वयवादि-सर्व्वधर्म्माप्रतिष्ठानवादि-भेदात् द्विविधः। तत्र श्राव[कः] त्रिविधः, मृदुमध्याधिमात्रभेदेन।
15 अत्र च मृदुमध्यौ पाश्चात्यवैभाषिकौ, अधिमात्रस्तु काश्मीरवैभाषिकः।

तत्र मृदुश्रावकस्य विचारः। नीलपीतादिवाह्यार्थाङ्गीकारपूर्व्वकं पुद्गलस्य नित्यानित्यत्ववियुक्तिमाहेति विहृतिः। तदुक्तम्—

20 अस्ति खल्विति नीलादि [९क] - - - - - - परा।
भावग्रहग्रहावेशगम्भीर[।]पायभैरवे॥

अस्ति-पुद्गलो— "भारवाहो ण णिच्चं भणामि णाणिच्चं भणामी"ति पुद्गलश्च रागवान् संसरतीति समप्रहाणा-

याशुद्धं मतमाध्यायन् । अशुभा भावना तु शरीरस्य विन्मूत्रशुक्रशोणि[त]श्लेष्मान्त्रान्त्र[सिंहानक]चिक्किण-क्लमथप्लीहायकृत्प्रभृतिसमुदाय(द)रूपता निरूपयेत् ।
तदुक्तम्—

5 इमं चर्म्मपुटं तावत् स्वबुद्धौ च पृथक् कुरु ।
अस्थिपञ्जरतो मांसं प्रज्ञाशस्त्रेण मोचय ॥
अस्थीन्यपि पृथक् कृत्वा पश्य मज्जानमन्ततः ।
किमत्र सारमस्तीति स्वयमेव विचारय ॥

इति । पुद्गलस्य नित्यत्वदर्शनपूर्व्वारोपः समाधिमलम् ।
10 यावज्जीवं बुद्धं धर्म्मं सङ्घं शरणं गच्छामि, - - - वन्द्यौ सुगतौथ दृढः (?), यावत्कुशलमूलं तमेकमात्मानं दमयिष्याम्येकमात्मानं समयी स्यामेकमात्मानं परिनिर्व्वापयिष्यामीति दृष्टिः ।

मध्यमस्य दृष्टिविदृति[ः] पूर्व्ववत् । किञ्चित्परार्थरुचिरसौ
15 [६] आनापानसमाधिना नित्यानित्यत्ववियुक्तपुद्गलदर्शनं ध्यानम् । कुम्भकेन निश्चेष्टीभावः समाधिमलं जाड्यावाहकत्वात् ।

श्रावक-अधिमात्रस्य वाह्यार्था[न]ङ्गीकारिणः शरीरस्य नैरात्म्यताव्यवस्थापनं विदृतिः । चतुरार्य्यसत्यपरिज्ञाने
20 पुद्गलस्य शून्यतादर्शनं ध्यानम् । अत्र च दुःखं पञ्चस्कन्धस्वरूपं ज्ञातव्यम् । समुदयो विकल्पः प्रहातव्यः, निरोधो विपश्यना साक्षात् कर्त्तव्यः, मार्गः शून्यतायाः सदाशिवरूपताऽध्यारोपो ध्यानमलम् । दृष्टौ पुनरस्य परार्थकारिताविशेषः । अत्र च मृदुश्रावको नियतगोत्रत्वाद-
25 कारुणिकत्वात् शाक्यबुद्ध एवेत्येके ।

अन्ये तु—

सर्व्वबुद्धा भविष्यन्ति नाभव्यो भूवि-विद्यते ।
न कर्त्तव्योऽवसादोऽस्मात् सम्यक्सम्बोधिसाधने ॥

इति। सत्त्वानां मृदुश्रावकोऽपि सम्यक्सम्बुद्धो भविष्य-
5 तीति। नियतगोत्रं तु कश्चित् बुद्धमपेक्ष[त इ]ति मन्यन्ते।
मध्यस्तु भाविप्रत्येकबुद्धः, अधिमात्रस्तु चतुःकल्पासंख्येया-
भिनिर्वर्त्त्यबुद्ध इति, प्रत्येकस्य विवृतिरधिमात्रश्रावकस्यैव।
अयं च प्रतिपन्नपुद्गलशून्याचिन्त्यतालक्षणमाचार्य्यस्वयम्भू-
ज्ञानविपश्यनासमर्थः। तत्र इन्द्रियान्निरोधो विपश्यना
10 [१०क] पुद्गलस्यानुपलब्धिः कायवा[क्चे]तसां संय[म]-
समर्थः। इदमस्य ध्यानम्। अत्रासन्ननिद्रस्य चेतसः सुखा-
वस्थाध्यानम्, चेतसः सुषुप्तावस्थाध्यानं च समाधिमलम्।
तत्र पूर्व्वस्मिन् भास्करमतानुप्रवेशः।

तदुक्तम्—

15 अनागतायां निद्रायां प्रनष्टे बाह्यगोचरे ।
या भवेन्मनसोऽवस्था भावयेत् तां प्रयत्नतः ॥

इति। अपरस्मिन् तु वैशेषिकमतानुप्रवेशः। तदाहुः
नागार्ज्जुनपादाः—

अजानानं हि प्रज्ञानं निद्रादृष्टान्तसाधितम् ।
20 इन्द्रियोपरतं यद्वज् ज्ञानं वैशेषिकं मतम् ॥

भगवत[ः] प्रवचनमपि—

वरं जेतवने रम्ये शृगालत्वं व्रजाम्यहम् ।
न तु वैशेषिकं मोक्षं गोतमागन्तुमर्हति ॥

इति। दृष्टिरपि पूर्व्ववत्। अयमपि चतुःकल्पासंख्येया-
25 भिनिर्वर्त्त्यबुद्धभावः, करुणा चानयोः श्रावकप्रत्येकयोः

सत्त्वावलम्बना, दुःखदुःखताविपरिणामदुःखताभ्यामहन्यहनि सत्त्वानालम्ब्य या करुणोत्पद्यते सा सत्त्वावलम्बना। श्रावकस्य देशना [१०] वाचकी प्रत्येकस्य तु कायिकी। तदुक्तम्—

5 सम्बुद्धानामनुत्पादे श्रावकानां परिक्षये।
ज्ञानं प्रत्येकबुद्धस्य संसर्गात् [च] प्रजायते ॥

इदानीं पारमितानययोगिन उच्यन्ते। तत्र मृदु-सौत्रान्तिकः— अस्य खलु परमाणुसञ्चयरूपोऽर्थः साकार-ज्ञानजनकः। तस्य चेयमेव प्रत्य(वेत्य)वेक्षता यदुत
10 साकारज्ञानजन[क]त्वं नाम। तदाहुः—

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥

इति विवृतिः। विषयेभ्यः परावृत्तेन्द्रियग्रामस्याचिन्त्यता ध्यानम्। तदुक्तमभ्यासस्यायं कलना यत् कालः सांख्यां
15 क्रियायाः। तस्मात् परिचयः कर्त्तव्यः। परिचयश्च—

चित्तं निश्चित्य बोधेन अभ्यासं कुरुते यदा।
तदा चित्तं न पश्यामि क्व गतं क्व स्थितं भवेत् ॥
भावयेद् गृहिभू - - - - षिलब्धाक्षणम्।
वज्रपर्य्यङ्कमाधाय नासाग्रे चञ्चलं मनः ॥

20 मलमस्य समाधेः पूर्व्ववत्। चितयानुपलब्ध्या प्रज्ञा-पारमितास्वभावेन पञ्चपारमिताऽऽचरणं फलवैमुख्ये न सत्त्वार्थपरिणामना तद्दृष्टेरिति।

मध्यो योगाचारः। तत्र साकारज्ञानवादी षट्केन युगपद् योगाचारे [पर]माणोः षडङ्गतेत्यादिना [११क]
25 न्यायेन परमाणूना[म]प्यनुपपत्तेः। चित्तमात्रमेवेदं चित्ताकारधारि ग्राह्यग्राहकभावविनिर्मुक्तं प्रकाशं प्रकाशत

इति प्रतिपन्नवान्। तदुक्तं चित्तमात्रं भो जिनपुत्रा! यदुत त्रैधातुकं इति। तथाचाहुः कीर्त्तिपादाः—

धियो नीलादिरूपत्वे बाह्योऽर्थ[:] किंनिबन्धनः।
धियोऽनीलादिरूपत्वे वाह्योऽर्थ[:] किंनिबन्धनः॥

5 इति। अन्यत्राप्युक्तम्—

न चित्तेषु बहिर्भूता इन्द्रियार्थाः स्वभावतः।
रूपादिप्रतिभासेन चित्तमेव हि भासते॥

तस्मात् चित्तमेव चित्राकारं परं निरपेक्षप्रकाश्यं प्रकाशत इति साकारविज्ञानवादियोगाचारस्य विवृतिः।
10 निराकारवादियोगाचारस्तु चित्तमेव इदमनाकार-स्वसम्वेदनरूपं इति मन्यते। तदुक्तम्—

बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते।
वासनालुठितं चित्तमर्थाभासं प्रवर्त्तते॥

यावदाभासते यत्र तन्मायैव च भासते।
15 तत्त्वतो हि निराभासः शुद्धानन्तनभोनिभः॥

निष्प्रपञ्चो निराभासो धर्म्मकायो महामुनेः।
रूपकायौ तदुद्भूतौ पृष्ठे मायैव तिष्ठते॥

इति विवृतिः। विधूतसकलवि[क]ल्पसच्चित्राद्वैतसाक्षा-त्करणं ध्यानं साकारवादिनः। तदुक्तम्—

20 यत्र यत्र [११] मनो याति ज्ञेयं तत्रैव योजयेत्।
चलित्वा यास्यते कुत्र सर्व्वमेव हि तन्मयम्॥

इति। सातादयाचिन्त्यनिष्प्रपञ्चनिराभासचित्तसाक्षा-त्करणं ध्यानं निराकारवादिनः। तथा च—

रूपमस्य मतं स्वच्छं निरा[का]रं निरञ्जनम्।
25 शक्यं तेन न हि ज्ञातुमबुद्धेन कदाचन॥

विज्ञानमात्रमेवेदमित्ययं ह्युपलम्भतः ।
स्थापयेन्न स किञ्चित् [तु] तन्मात्रेणावतिष्ठते ॥
यदा त्वलम्बनं ज्ञानं नैवोपलभ्यते तदा ।
स्थितो विज्ञप्तिमात्रत्वे ग्राह्यभावे तदग्रहात् ॥

5 परमार्थसन्नित्यसाकारविज्ञानसमाधौ भगवतः संस्थित-वेदान्तवादिमतानुप्रवेशः। स हि परमार्थसन्नित्यं स्वचिद्रूप-ब्रह्माभिन्नपरिणामरूपं जगदिच्छति। तथा चोक्तम्—

यद् यद् यद् दृश्यते किञ्चित् तत् तत् ब्रह्मेति कल्पयेत्।
ततो नान्यगतं चित्तं ब्रह्मणैवावतिष्ठते ॥

10 इति समाधिमलं साकारवादिनः। एवं निराकार-वादिनाऽपि नित्यनिराभासनिष्प्रपञ्चस्वसम्वेदनविज्ञान-भावनायां भास्करमतस्थितवेदान्तवादिमतानुप्रवेश-प्रसङ्गः। सोऽपि व्यपगत(ः)सकलनामरूपप्रपञ्चोपप्लव-विशुद्धप्रकाशानन्दघननि [१२क] त्यब्रह्माभ्युपगच्छति ।

15 बोधाम्भो(म्बो)धौ मयि स्वच्छं तच्छायं विश्वबुद्वयः ।
उदितो वा प्रलीनो वा न विकल्पाय कल्पते ॥

इति निराकारवादिनः समाधिमलम्। दृष्टिरनयाः पूर्व्ववत् ।

अधिमात्रो माध्यमिकः। तत्र मायोपमाद्वयवादिनः
20 विवृतिः—

न सन् नासन् न सदसन् न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

अस्य चायं अर्थः। न सद् बाधायोगात्, असदपि न चाभासनवशात्, तथा दोषाद् द्वन्द्वात् उभयमपि [न],
25 नाप्यनुभयं तथा बोधाभावादिति। अपि च पूर्व्वेतर-परामर्शात्—

मूर्त्तिश्चित्ते यथावस्तुशक्ति - - स्कवासङ्गः ।

स हि मायोपमाद्वयेति विवृतिः । अस्यैव च मायोपमाद्वयस्य भावना ध्यानम् । यस्तत्रोच्छेदाभिनिवेशस्तद् ध्यानमलम् । मायोपमाद्वयाधिमोक्षतः षट्पारमितापरि-
5 पूरिर्दृष्टिः ।

सर्व्वधर्म्माप्रतिष्ठानवादिनां त्वयं विचारः—

न मतं शाश्वतं विश्वं न चोच्छेदि समीहितम् ।
शाश्वतोच्छेदिनो युग्मं नानुभयं विनोभयम् ॥
सर्व्वस्मिन् प्रतिष्ठाने [च] वस्तुतत्त्वं विदुर्बुधाः ।
10 अथैषा कल्पना नैव [१२] यच्चिद् वेत्ति न चित्तताम् ॥
यावत् सर्व्वसमारोपः स सर्व्वः सर्व्वथा न हि ।
मध्यमार्थे निरारोपस्तत्रारोहविधी कुतः ॥
अनाभोगे हि यद् ज्ञानं तच्चाचिन्त्यं प्रचक्षते ।
सञ्चिन्त्य यदचिन्त्यं वै तद[चि]न्त्यं भवेन्नहि ॥
15 येनाजातं जगद्बुद्धं बुद्धिः शुद्धैव बोधतः ।
निजं तस्य जगत् सत्यमनाभोगेन धीमतः ॥

तदुक्तम्—

सर्व्वारोपविनिर्मुक्ते स्वतस्तत्त्वे चकासति ।
शून्यताद्यभिधानैस्तु तत्रारोपनिराक्रिया ॥

20 अस्य च विचाराय आयातस्य अर्थस्य अनारोपरूपस्य अनभिनिवेशविहारेण साक्षात्क्रिया ध्यानं सर्व्वार्थोच्छेदो जडीभावः समाधिमलम् ।

अनारोपेण षट्पारमितापरिपूरणं दृष्टिः । अत्र मृदुमध्ययोर्धर्म्मावलम्बना करुणा । धर्म्मावलम्बना चानित्यता-
25 व्यसनसम्पातिनः सर्व्वधर्म्मानालम्ब्य उत्पद्यते या सा बोध्यव्या । अधिमात्रस्य च आलम्बनानिःस्वभावा मन-

स्कारधर्म्माधिगमानालम्बना करुणा । कायत्रयव्यवस्था चास्य मैत्रेयनाथैरुक्ता । तथा च—

करोति येन चित्राणि हितानि जगतः समम् ।
आ भवात् सोऽनुपच्छिन्नः कायो नैर्म्माणिको मुनेः ॥
5 द्वात्रिंशल्लक्षणाशीतिव्यञ्जनात्मा मुनेरयम् ।
साम्भोगिको मतः कायो महायानोपभो[१३क]गतः ॥
सर्व्वाकारां विशुद्धिं ये धर्म्माः प्राप्ता निराश्रवाः ।
स्वाभाविको मुनेः काय[:] तेषां प्रकृतिलक्षणः ॥

इति । मन्त्रनयस्तु अस्मद्वि[धै]रिहातिगम्भीरत्वाद्
10 गम्भीरनयाधिमुक्तिकपुरुषविषयत्वात् चतुर्मुद्रादिसाधन-प्रकाशनविस्तरत्वाच्च न व्याक्रियते । तथा च—

एकार्थत्वेऽप्यसंमोहात् बहूपायाददुष्करात् ।
तीक्ष्णेन्द्रियाधिकाराच्च मन्त्रशास्त्रं विशिष्यते ॥

कृतश्चा[स्मा]भिरत्र सेकनिर्णयो नाम ग्रन्थः ।

15 ननु यदि महायाननिर्णीत एवार्थः परमार्थोऽस्ति अस्य किमर्थं तर्हि श्रावकप्रत्येकयाने भगवान् देशितवान्? तन्न, महायानप्राप्यप्रापनार्थं एव श्रावकप्रत्येकयान-सोपानयोर्निर्म्माणात् । तदुक्तम्—

आदिकर्म्मिकसत्त्वस्य परमार्थावतारणे ।
20 उपायस्त्वयं सम्बुद्धैः सोपानमिव निर्म्मितः ॥

सद्धर्म्मपुण्डरीकेऽप्युक्तम्—

एक हि यान नयश्च एकः
एका चेयं देशन नायकानाम् ।
उपायकौशल्य ममेवरूपं
25 यन्त्रानि यानान्युपदर्शयामि ॥

नागार्ज्जुनपादैरप्युक्तम्—

धर्म्मधातोरसंभेदाद् ध्यानभेदोऽस्ति न प्रभो।
यानचितयमाख्यातं त्वया सत्त्वावतारतः॥

अन्यचाप्युक्तम्— [१३]

5 मुक्तिस्तु शून्यतादृष्टिस्तदर्थाशेषभावना।

इति। इदं च यानचितयप्रकाशनं मन्यम[ा]नशून्य[ता] सैव भगवतोऽवगन्तव्यः। तथाहि—

नोदाहृतं त्वया किञ्चिदेकमप्यक्षरं विभो।
कृत्स्नश्च वै मायजनो धर्म्मवर्षनतर्षितः॥
10 चिन्तामणिरिवाकम्प्यः सर्व्वसङ्कल्पवायुभिः।
तथापि सर्व्वसत्त्वानामशेषाशाप्रपूरकः॥
चक्रभ्रमणयोगेन निर्व्विकल्पेऽपि तायिन[ः]।
सम्भारो बेधसामर्थ्यात् देशना सम्प्रवर्त्तते॥
यानानां नास्ति वै निष्ठा यावच्चित्तं प्रवर्त्तते
15 परावृत्ते तु वै चित्ते न यानं नापि यायिनः
सद्धर्म्मरत्नघटिका वाग् ह्यच ग्रथितामला।
हृदये क्रियतां धीरास्तत्त्वरत्नावली मुदे॥
संग्रहं तु प्रियत्वेन विस्तरद्वेषिणा मया।
भूरिर[नु]क्तमे तस्मिन् क्षन्तव्यं विस्तरप्रियाः॥
20 विधाय भव्यार्थनयाप्रयत्ना-
दिमं मया ग्रन्थमनुत्तरार्थम्।
आलम्भि यत्पुण्यमनेन लोक-
स्तथागतत्वं लभतामलभ्यम्॥

॥ तत्त्वरत्नावली स[१४क]माप्ता।

कृतिरियं पण्डितावधूताद्वयवज्रपादानाम्॥

# ४। पञ्चतथागतमुद्राविवरणम्।

नमः सर्व्वविदे।

प्रतीत्यजाताः परिकल्पशून्याः
शून्या[ः] स्वभावेन न वस्तुसन्तः।
नोच्छेदिनश्चिचचिदेकरूपा
5 रूपादयः पञ्चजिना जयन्ति॥

पञ्चस्कन्धाः पञ्चतथागत[ा]ः। तच चत्वारो किं ज्ञान-मात्रताप्रतिपादनाय अक्षोभ्येन मुद्र्यन्ते? एतेन बाह्य[ा]-कारभावे ग्राहकशून्यतया ग्राह्यग्राहकरहितं परमार्थ-सत्सम्बिन्माचं विज्ञानमेव तिष्ठते। इदमेव शरदमल-10 मध्याह्न(न)गगनायमानं निराकारवादिनां मौलं ज्ञानं साध्यम्। तथा चोक्तम्—

शून्यं कल्पितरूपेण निराभासमनाकृति।
सत्सम्बित्सातमाचं वै पृष्ठाकारचयाकुलम्॥

तदुक्तम्,—रूपकायौ तु पश्चिमौ इति। तथा च—

15 निष्प्रपञ्चो निराभासो धर्म्मकायो महामुनेः।
रूपकायौ तदुद्भूतौ पृष्ठे मायैव तिष्ठते॥

इतिं नन्वक्षोभ्यमुद्रयैव सिद्धत्वात् किमर्थं तर्हि अक्षोभ्यो वज्रस[१४]त्त्वेन मुद्र्यते इत्यागमः? यावत्कल्पिता-कारशून्यताप्रतिपादनाय इति चेत् तन्न। पूर्व्वमुद्रयैव 20 सिद्धत्वात्। तस्मात् यथाऽक्षोभ्यमुद्रयैव ज्ञानं मौलं पृष्ठमन्यत् तथा वज्रसत्त्वमुद्रया विज्ञानमपि पृष्ठं मौलं वज्रमिति स्यात्। उक्तं च वज्रशेखरे—

दृढं सारमसौशीर्यमच्छेद्याभेद्यलक्षणम्।
अदाहि अविनाशि च शून्यता वज्रमुच्यते॥

इति। पृष्टे रूपादिकं चेत्, [मौ]लज्ञानादक्षोभ्यमुद्रया तद्वज्र(या)सत्त्वं पृष्टेऽहं तन्न - - न्न किम्। सत्त्वमिति पृष्ठ इति चेत् तर्हि करुणाभावात् उच्छेदवादप्रसङ्गः। इष्यते च—

5 वज्रेण शून्यता प्रोक्ता सत्त्वेन ज्ञानमात्रता।
तादात्म्यमनयोः सिद्धं वज्रसत्त्वस्वभावतः॥
शून्यताकृपयोर्भेद[ः] प्रदीपालोकयोरिव।
शून्यताकृपयोरैक्यं प्रदीपालोकयोरिव॥
भावेभ्यः शून्यता नान्या न च भावोऽस्ति तां विना।
10 अविनाभावमियत् कृतकानित्ययोरिव॥
कथ्यमाने यथात[त्त्वे] उच्छेदो नैव सम्वृतेः।
सम्वृतिव्यतिरेकेण [१५क] न तत्त्वमुपलभ्यते॥

इत्यादि विस्तरः। एवमक्षोभ्यवज्रसत्त्वयोरैक्यमिति चेत् तर्हि विज्ञानरूपाद्यपरित्यागे चित्राद्वैतवादो ज्यायान्।
15 तदुक्तम्—

सच्चित् चिन्मात्रमशेषकल्प-
शून्यं हि साकारमतं मतं मे।
गच्छत्तृणस्पर्शसमानमन्ये
तन्मध्यमार्थं प्रवदन्ति सन्तः॥

20 चित्राद्वैतवादिनां तु परमार्थसदिति ज्ञानमपेशलम्। ग्राह्यग्राहकशून्यचित्राद्वैताक्षोभ्यरूपज्ञानस्य वज्रसत्त्वमुद्रया वस्तुसत्तानिरस्तत्वात्। तदुक्तम्—

रूपादिकल्पशून्यं चेत् ज्ञानमक्षोभ्यमुद्रया।
तद्वज्रसत्त्वमुद्रातो वस्तुसत्ता निरस्यते॥
25 न त्र विज्ञप्तिमात्रस्य कल्पिताकारशून्यता।
क्रियते वज्रसत्त्वेन पूर्वं तस्यानवस्थितेः॥

तदेवं परमार्थसदितिशल्यापगमे सर्व्वथाप्रतिष्ठान-रूपानाभोगयुगनद्धाद्वयवादिसम्वेदनसिद्धमध्यमकसिद्धान्तः प्रेयान्। [१५] अयं च सद्गुरुपादप्रसादादवगम्यते। नन्वत्र सम्वेदनसिद्धौ मायोपमाद्वयवादप्रसङ्गेन सर्व्वथाप्रतिष्ठान-
5 मिति चेत्—

यत् प्रतीत्यसमुत्पन्नं [नोत्पन्नं] तत् स्वभावतः ।
स्वभावेन यन्नोत्पन्नं उत्पन्नं नाम तत् कथम् ॥

इति। सम्वेदनं च प्रतीत्यसमुत्पन्नं तस्मात् सम्वेदन-मेवाप्रतिष्ठितमजातपदम् ।

10 तथा च—

सम्वेदनमजातं वै वस्तुसत्ताऽपि तादृशी ।
वज्रसत्त्वस्वरूपं तु जगदेव जगौ(सौ) मुनिः ॥

किञ्च मञ्जुश्रीस्तथागतेन पृष्टः कतमोऽसावचिन्त्य-धातुः? मञ्जुश्रीराह, यो धातुर्निश्चितो, न चित्तगमनीयो,
15 न चित्तप्रमेयो, न चित्तचेतनया प्रतिवेदितव्यः, असा-वुच्यतेऽचिन्त्यधातुः। अथ च पुनर्भगवन् चित्तमेवाचिन्त्य-धातुः। तत् कस्य हेतोः? न ह्यचित्ते चित्ते चित्तं संविद्यते। निश्चित्तो हि चित्तं चित्तस्य यथार्थावबोधात्। अथ च सर्व्वाकारो भगवतोऽचिन्त्यधातुः। अन्यचाप्युक्तम्—

20 अविकल्पितसङ्कल्प अप्रतिष्ठितमानस। [१६क]
अस्मृत्यमनसिकार निरालम्ब नमोऽस्तु ते ॥

चतुःप्रदीपे—

यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पाद स्वभावतोऽस्ति ।
25 यः प्रत्ययाधीन स शून्य उक्तः
यः शून्यतां जानति सोऽप्रमत्तः ॥

आर्य्यलङ्कावतारे—

भ्रान्ति विधूय सर्व्वा हि निमित्तं जायते यदि ।
सैव तस्य भवेद् भ्रान्तिरशुद्धतिमिरं यथा ॥

तथा च—

5 मा भूत् सम्वृतिप्रतिष्ठानमत एव मुनिर्भयात् ।
भिनत्ति देशनाधर्म्ममुक्ता ह्यशून्यतात्मना ॥

उक्तं च हेवज्रे—

स्वभावश्चैवाद्यनुत्पन्नं [न] सत्यं न मृषेति च ।

किञ्च—

10 सर्व्वः समानः प्रतिभज्यमानः
शू[न्यो]क्तिकांक्षामधिया कृतान्तः ।
बौद्धस्य बाह्यस्य विभागकर्त्री
न स्या[दा]दिका यदि शून्यतोक्तिः ॥

आह च, उच्छेदशून्यतां अपनयन्—

15 तथतां ये तु पश्यन्ति मध्यमार्थानुसारतः ।
ते वै तत्त्वविदो धन्याः प्रत्यक्षं यदि संविदा ॥

तदुक्तं डाकिनीवज्रपञ्जरे—

शून्यताकरुणाभिन्नं यत्र चित्तं प्रभाव्यते ।
सो हि बुद्धस्य धर्म्मस्य सङ्घस्यापि हि देशना ॥

20 तस्मात् पञ्चाकाराणां प्रतीत्य[१६]समुत्पन्नानां पञ्चतथागत(:)स्वभावत्वात्, स्वभावस्य च शून्यताकरुणाभिन्नत्वात्, शून्यताकरुणाभिन्नं जगदिति स्थितम् । एतदेव सद्गुरोरुपदेशतो ध्यानमविच्छिन्नम्—

नदीस्रोतप्रवाहेन दीपज्योतिःप्रबन्धवत् ।—

25 मन्त्रतत्त्वानुसारतः । तथा चाहुर्नागार्ज्जुनपादाः—

कूटागारमिदं न यत् त्रिभुवनं न प्राणिनोऽमी जनाः
चक्रेशोऽस्मिन् [न] मानुषो न विषया नाम्नाणि न
ह्याद्यः ।
रूपाद्या न च धर्म्मतात्मकतया ते माण्डलेया इमे
5 विश्वं मण्डलचक्रमाकलयतश्चेतः किमु भ्राम्यसि ॥
प्रतीत्यसम्भवादेव गन्धर्व्वपुरवत् स्फुटम् ।
न स्वभावस्थितं विश्वं नाकाशाम्भोजसन्निभम् ॥
उक्तं च हेवज्रे—
अमी धर्म्मास्तु निर्व्वाणं मोहात् संसाररूपिणः ।
10 इति ।

॥ पञ्चतथागतमुद्राविवरणं समाप्तं इति ॥

# ५। सेकनिर्णयः।

नमो बुद्धाय।

एवंकारं नमस्कुर्मो य[ः] सत्त्वक्षणकारणम्।
आनन्दा यत्र जायन्ते भेदतो बोधिसिद्धये॥
चित्रं ततो विपाकः स्यात् तृतीये तु विलक्षणम्। [१७क]
विमर्दश्च ततो ज्ञेयो हठयोगनिराकृतेः॥
5 आलोचनं विमर्दश्चेत् तृतीये कथमिष्यते।
यत् तत्रालोचनं नैव भवेद् वित्तिरलक्षणा॥
विलक्षणमतो युक्तं हन्तुं रोद्धुं तृतीयके।
स्वसम्वित्तेर्भवेत् सिद्धिरागम[ा]र्थोऽपि सङ्गतः॥
चुम्बनालिङ्गने चित्रं दृष्टौ विपाकनामकम्।
10 मणौ विलक्षणं येषां ते च दुःसेकसम्विदः॥
रत्नगर्भे च या वित्तिः सैव तत्त्वं भवेद् यदि।
सैव वेद्यं भवेत् तत्त्वं न ह्येतत् बौद्धसम्मतम्॥

तथा च देवि परिपृच्छसि सैव निर्नादतन्त्रे—

रत्नपुरमिदं देवि किञ्जल्के ज्वलतां व्रजेत्।
15 रुद्रो युग्म[ः] शिवः श्रेष्ठ[ः] शक्तिः सैव परात्परा(ः)॥
लक्ष्यलक्षणनिर्मुक्तं वागुदाहारवर्जितम्।
शिवशक्ति(ः)समायोगात् जायते चाद्भुतं सुखम्॥
न सन्ति तत्त्वतो भावाः शक्तिरूपेण भाविताः।
शक्तिस्तु शून्यतादृष्टिः सर्व्वारोपविनाशनी॥

20 उच्छुष्मतन्त्रेऽपि—

शिवशक्तिसमायोगात् सत्सुखं परमाद्वयम्।
न शिवो नापि शक्तिश्च रत्नान्तर्गतसंस्थितम्॥

योगाध्यायेऽपि [१७]—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेत् न स तत्त्ववित् ॥

वेदान्तवादिनोऽपि—

5 अतीन्द्रियमवित्तिश्च ज्ञानं भास्करसम्मतम् ।
वित्तिरानन्दमात्रं च भगवद्वादिसाधनम् ॥
शक्तिसङ्गमसंक्षोभात् शक्त्यावेशावसानिकम् ।
यत्सुखं ब्रह्मतत्त्वस्य तत्सुखं ब्राह्ममुच्यते ॥
दुःखानामागमो नास्ति सुखं तच्च निरन्तरम् ।
10 आनन्दो ब्रह्मणो रूपं तच्च मोक्षेति भण्यते ॥
यद् यद् वै दृश्यते किञ्चित् [तत्] तद्ब्रह्मेति कल्पयेत् ।
ततोऽन्यगतचित्तं [तु] ब्रह्मणैवावतिष्ठते ॥
प्रियादर्शनमेवैकं किमन्यद्दर्शनान्तरैः ।
प्राप्यते येन निर्व्वाणं सरागेणापि चेतसा ॥
15 त्यज धर्म्ममधर्म्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज ॥

भगवद्गीतायामपि—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टो[ऽन्तः] ह्यनयोस्तत्त्वदर्शिभिः ॥

20 किञ्च ग्राह्यादिशून्यं चेत् चित्तमक्षोभ्यमुच्यते ।
कथास्वागमतो वज्र [१८क] सत्त्वमुद्राවियोगतः ॥
किमर्थं नियमेनैतत् देशकैरथ देश्यते ।
इदं तथागताश्वासधिया पूर्व्वं प्रकाश्यते ॥
बोलगर्भे च साकारं निराकारं तदग्रतः ।
25 मध्यमा वर्णयन्त्येके नेति नो गुरुदर्शनम् ॥

वज्रगर्भे तदग्रे वा पतितं वा कपालके ।
न चेष्टमन्तरालेऽपि तत्त्वं वित्तौ गुरोर्मुखात् ॥
विचित्रं विविधं ख्यातं इत्यादि सुस्थितं कथम् ।
मध्यन्तर्गतमित्यादि सद्गुरोः सुष्ठु सङ्गतम् ॥
5 हसित्यादिविशुद्ध्या यत् आचार्य्यादिसमीहितम् ।
उत्पत्त्या तद् व्यवस्थेयं न चोत्पन्नस्वभावतः ॥
चित्रत्वात् चित्रमाघृष्टेः सुखात् पाको मणेः पुरः ।
गुरो[ः] तत्त्वं विजानीयात् विमर्द्दात् विरतौ रमः ॥
कर्म्ममुद्रां समासाद्य धर्म्ममुद्रां विभावयेत् ।
10 तस्या ऊर्द्ध्वं महामुद्रा यस्याः समयसम्भवः ॥
आनन्दाः प्रतिमुद्रास्याः महामुद्रां विना पुनः ।
आगमाच्च स्वसम्वित्तेः सद्गुरोरुपदेशतः ॥
विचित्रं कर्म्ममुद्रातो विपाको जगदात्मता ।
स्थैर्य्यं विलक्षणं तत्र विमर्द्दो जगदीक्षणम् ॥ [१८]
15 सर्व्वस्मि[न्न]प्रतिष्ठानं महामुद्रेति कीर्त्त्यते ।
विमलत्वात् स्वसम्वित्तेः विचित्रादेर्न सम्भवः ॥
अनाभोगं हि यद् ज्ञानं तच्चाचिन्त्यं प्रचक्षते ।
सञ्चिन्त्य यद् अचिन्त्यं वै तदचिन्त्यं भवेन्न हि ॥
तथता ये तु पश्यन्ति मध्यमार्थानुसारतः ।
20 ते वै तत्त्वविदो धन्याः प्रत्यक्षं यदि संविदा ॥
यो वित् सर्व्वसमारोपः स सर्व्व[ः] सर्व्वथा न हि ।
मध्यमार्थो निरारोपः तत्रारोपविधौ कुतः ॥
ज्ञानज्ञेयासमारोपे मन्यना तत्र नान्यथा ।
सर्व्वस्तथा यथापूर्व्वं यथा बुद्धिस्तथा न हि ॥
25 स्वेनाजातं जगद्बुद्धं बुद्धिः शुद्धैव बोधतः ।
निर्जं तस्य जगत् सत्यमनाभोगेन धीमतः ॥

अविभावितसम्बन्धो विकल्पोऽसौ प्रतीत्यजः ।
तद्देष एव निर्व्वाणे नो कथाः चित्तविभ्रमम् ॥
प्रतिपक्षे स्थितो नैव तत्त्वाशक्तोऽपि नैव यः ।
गाढं नैव फले यस्य महामुद्रां स विन्दति ॥
5 यथैव कर्म्ममुद्रायां आनन्दादिव्यवस्थितिः ।
तथा समयमुद्राया वज्राचार्य्यप्रसादतः ॥
विचित्रं कर्म्ममुद्रैव धर्म्ममुद्राविपाकजा ।
विलक्षणं महामुद्रा विमर्द[ः]समयो भवेत् ॥
महामुद्राम [१९ क] जानानाः कर्म्ममुद्रैव साधना ।
10 आम्नायतत्त्वतो भ्रष्टा रौरवं यान्ति योगिनः ॥
मुद्रा तावत् न बुद्ध्यन्ते चतस्रश्च चतुःक्षणाः ।
यावन्न शवरेशस्य स्पृशन्ति पादपोत्सवः ॥
सम्यक् सेकं विधायैतत् हठदुःसेकवर्ज्जितम् ।
यत् साधितं मया पुण्यं तेनास्तु जगतः सुखम् ॥

॥ सेकनिर्णयः(निर्द्देशः) समाप्तः ॥

# ६। [चतुर्मुद्रा]।

एवम्— वज्रसत्त्वं प्रणम्यादौ विशुद्धज्ञानतन्मयम्।
मुद्रान्वयः समासेन क्रियते आत्मबुद्धये॥

इह हि मुद्रान्वयविभ्रान्त्या मूढमनसो भ्रमन्ति भवार्णवे दुःखिताः। तेषां सुखेन चतुर्मुद्रार्थप्रतिपत्तये तन्त्रानु-
5 सारेण महासुखसाधनं प्रसाध्यते। चतुर्मुद्रेति— कर्म्म-मुद्रा, धर्म्ममुद्रा, महामुद्रा, समयमुद्रा। तत्र कर्म्ममुद्रायाः स्वरूपं निरूप्यते। कर्म्म या कायवाक्चित्तचिन्ता तत्प्रधाना मुद्रा कल्पनास्वरूपा, तस्यां कर्म्ममुद्रायां आनन्दा जायन्ते क्षणभेदेन भेदिताः—

10 क्षणज्ञानात् सुखज्ञानं एवंकारे प्रतिष्ठितम्।

आनन्दाश्चत्वारः— आनन्दः, परमानन्दः, सहजा-नन्दः, विरमानन्दः। [१९] अन्यथा—

परमविरमयोर्मध्ये लक्ष्यं वीक्ष्य दृढीकुरु।

इति यदुक्तं तत् सङ्गतं न भवति। चत्वारः क्षणाः—
15 विचित्र, विपाक, विलक्षण, विमर्द। मध्ये विलक्षणं दत्त्वा सेके बोद्धव्यम्। हठयोगे पुनः सहजविलक्षणयोरन्ते स्थितिर्बोद्धव्या। सेकहठयोगे चेदं निर्दिष्टं भगवता। सहजं सत्सत्त्वं सहजच्छायानुकारित्वात् सहजमित्यभिधीयते। सहजच्छाया सहजसदृशं ज्ञानं प्रतिपादयति इति। सहजं
20 प्रज्ञाज्ञानम्। अतएव प्रज्ञाज्ञाने सहजस्योत्पत्तिर्नास्ति। यस्याः सहजं नाम स्वरूपं सर्व्वधर्म्मानामकृत्रिमलक्षणं इति यावत्। तस्मात् कर्म्ममुद्रां प्राप्य निस्यन्दफल-मुत्पद्यते। सदृशस्यन्दो निस्यन्दः। सादृश्यं यथा दर्पणार्पितं मुखस्य प्रतिबिम्बं मुखं न भवति। न पूर्व्वसिद्धं नाप्यधुना-

सिद्धं तदेव मुखप्रतिबिम्बं सादृश्यमात्रमापादयति तथापि लोकाः स्वमुखं दृष्टमिति ज्ञात्वा भ्रान्त्या सन्तुष्टा भवन्ति । तथैवाचार्य्याः कुमतदाः प्रज्ञाज्ञानमासाद्य सहजमनुभूतं इति ज्ञात्वा सन्तोषं उत्पादयन्ति, सन्तुष्टाश्च सन्तो धर्म्म-
5 मुद्राया वार्त्तामपि न जानन्ति। धर्म्ममुद्रामजानाना केवलया कर्म्ममुद्रया कृत्रिमया कथ[२०क]मकृत्रिमभूतं सहजाख्यं उत्पद्यते । सजातीयात् कारणात् सजातीयस्य एव कार्य्यस्य उत्पत्तिर्भवति न तु विजातीयात् यथा शालीबीजात् शाल्यङ्कुरोत्पत्तिर्भवति नतु कोद्रव्यस्य।
10 तथा धर्म्ममुद्राया अकृत्रिमायाः सकाशात् अकृत्रिमं सहजं उत्पद्यते । तस्मात् धर्म्ममुद्रैव कारणम् । अभेदे भेदोप-चारेण महामुद्रायाः । कस्मात्? तर्हि भगवतोक्तम्—

एकाराकृति यद्दिव्यं मध्ये वँकारभूषितम् ।
आलयं सर्व्वसौख्यानां बुद्धं रत्नकरण्डकम् ॥

15 इति। बुद्धच्छायानुकारित्वात् करण्डकं स्थानं आधारः, तस्मात् कर्म्माङ्गनाया आनन्दसन्दोहरत्नाकरं सरोरुहम्। तत् स्वच्छमास्थानं बोलकक्कोलरससंयोगेन अवधूत्या सम्वृतिबोधिचित्तमण्यन्तर्गतं यदा भवेत् तदा क्षणिकनामा-परसहजाख्यं ज्ञानमुत्पद्यते । न तत् सहजनिस्यन्द[ः]।
20 तत्स्वरूपेण प्रज्ञाज्ञानानन्दत्रयः क्षणचतुष्टयान्वितं सेके हठयोगे च कर्म्ममुद्राया निस्यन्दफलमुक्तम् । [२०]

॥ कर्म्ममुद्रानिस्यन्दनिर्द्देशः प्रथमः ॥ १ ॥

ॐ—धर्म्ममुद्रा धर्म्मधातुस्वरूपा निष्प्रपञ्चा निर्व्वि-कल्पा अकृत्रिमा उत्पादरहिता करुणास्वभावा परमा-
25 नन्दैकसुन्दरोपायभूता। प्रवाहनित्यत्वेन सहजस्वभावा या

प्रज्ञायाः सहजोदयत्वेन अभिन्ना या सा ध[र्म]मुद्रेत्यभि-
धीयते। अन्यत् लक्षणं तस्याः सकलाज्ञानान्धकारे
तरणिकिरणसदृशं गुरुपदेशतः दृष्ट[प]समा तथापि
भ्रान्तिशल्यवर्ज्जितं बोद्धव्यम्। सकलक्षितिजलपवन-
5 हुताशनैर्महाशवलितं मैत्र्येकस्वभावं निस्तरङ्गशून्यता-
करुणाभिन्नं च बोद्धव्यम्। उक्तं च भगवता—

ललना प्रज्ञास्वभावेन रसनोपायसंस्थिता।
अवधुती मध्यदेशे तु ग्राह्यग्राहकवर्ज्जिता॥

एतन्निपुनेनापि तथताकारेण सन्निकृष्टकारणत्वेन मार्गो
10 ज्ञातव्यः। मार्गज्ञाने सादरनिरन्तरं मार्गाभ्यासात् निरो-
धस्य सहजस्वभावस्य साक्षात्कृतित्वं भवति। तथा चोक्तम्—

नापनेयं अतः किञ्चित् प्रक्षेप्तव्यं न किञ्चन। [२१क]
द्रष्टव्यं भूततो भूतं [भूत]दर्शी विमुच्यते॥

ललना रसना तयोर्मध्यदेशे निवासिनी अवधूती
15 सैवाधिगतसकलपदार्थसहजस्वभावैकचित्तवृत्तेः सद्गुरूप-
देशतो धर्म्ममुद्रा महामुद्राया अभेदेन हेतुभूता।

॥ धर्म्ममुद्राविपाकफलनिर्द्देशः द्वितीयः॥ २॥

आः—महामुद्रेति। महति चासौ मुद्रा चेति महामुद्रा
(चेति)। महामुद्रा निःस्वभावा ज्ञेयाद्यावरणविवर्ज्जिता
20 शरदमलमध्याह्नगगनसङ्काशा सकलसम्पदाधारभूता भव-
निर्व्वाणैकस्वरूपा अनालम्बनकरुणाशरीरा महासुखैक-
रूपा। तथा च, अमनसिकारा धर्म्मा कुशला मनसि-
कारा धर्म्मा अकुशला प्रवचने च।

अविकल्पितसङ्कल्प अप्रतिष्ठितमानस।
25 अस्मृत्यमनसिकार निरालम्ब नमोऽस्तु ते॥

इति या सा महामुद्रेत्यभिधीयते। तया महामुद्रया अचिन्त्यस्वरूपया समयमुद्राख्यफलं जायते।

॥ महामुद्रावैमल्यनिर्द्देशस्तृतीयः ॥ ३ ॥ [२१]

हूँ—समयमुद्रेति सम्भोगनिर्म्माणकायाकारस्वभावेन स्वच्छाकारेण च सत्त्वार्थाय वज्रधरस्य हेरुकाकारेण विस्फुरणं यत् सा समयमुद्रेति चोपदिश्यते। तां च समयमुद्रां गृहीत्वा चक्राकारेण पञ्चविधं ज्ञानं पञ्चविधं परिकल्प्य आदर्श-समता-प्रत्यवेक्षणा-कृत्यानुष्ठान-सुविशुद्ध-धर्म्मधातुभिः आदियोग-मण्डलराजाग्रि-कर्म्मराजाग्रि-बिन्दुयोग-सूक्ष्मयोगैः समयमुद्राचक्रं भावयन्त्याचार्य्याः। तेन ते कृतपुण्या भवन्ति। ततश्च न धर्म्ममुद्राफललाभिनो भवन्ति, नियतार्थकारणात् नियतस्यैव कार्य्यस्योत्पत्तिरिति वचनात्। तस्मात् सहजसिद्धरसात् न वेधेन स्थिरचलादयो येन वा बालपरिकल्पिता ते संबोधिका[रण]-तामुपयान्ति।

न मन्त्रजापो न तपो न होमो
न माण्डलेयं न च मण्डलं च।
स मन्त्रजापः स तपः स होमः
तन्माण्डलेयं तन्मण्डलं च ॥ [२२क]

समासतः चित्तं समाजरूपीति। समासतः सर्व्वधर्म्माणामेकाकारतो यदुत महासुखाकारतः चित्तमिति-बोधिचित्तं समाजरूपीति। धर्म्ममुद्रामहामुद्राभिषेकरूपं वा ज्ञानं सत्समाज इत्यभिधीयते।

॥ समयमुद्रापुरुषकारफलनिर्द्देशः चतुर्थः समाप्तः ॥ ४ ॥

# ७। सेकतान्वयसंग्रहः।

नमो बुद्धाय।

कल्याणमित्रवाराङ्कोऽपि समाधिमाजपत्यनवग्राह्यः।
करतलगतमिव तत्त्वं षट्पञ्चमविषमं धत्ते॥

वज्राचार्य्यात्तु संज्ञानसेकतात्पर्य्यसंग्रहम्।
विदित्वा कुर्महेऽनेकसेकग्रन्थान् यथागमम्॥

5 प्रथमं कलसाभिषेको द्वितीयं गुह्यमुत्तमम्।
प्रज्ञाज्ञानं तृतीयं वै चतुर्थं तत् पुनस्तथा॥

अस्यार्थः— प्रथमं कलसाभिषेक इति, उदकमुकुट-वज्रघण्टानामाचार्य्यलक्षणाः षट् कलसाभिषेकाः। बाह्य-वारिणैव बाह्यमलस्य अविद्यामलक्षालनाय सिञ्चते-10ऽनेनेति सेकः। एषां सर्व्वेषां कलसव्यापारात् कलसा-भिषेकसंज्ञा। अवैवर्त्तिकाभिषेकाश्चैते षट्तथागतस्वभाव-त्वात्। [२२] तथाहि उदकाभिषेक आदर्शज्ञानात्मको-ऽक्षोभ्यस्वभावः, मुकुटाभिषेकः समताज्ञानात्मको रत्न-सम्भवस्वभावः, वज्राभिषेकः प्रत्यवेक्षणाज्ञाना[त्मकः] 15 अमिताभस्वभावः, अधिपत्याभिषेकः कृत्यानुष्ठानरूपो अमोघसिद्धिस्वभावः, नामाभिषेको अविद्यानिरोधात् विद्यानुगतविशुद्धधर्म्मधातुज्ञानात्मको वैरोचनस्वरूपः, आचार्य्याभिषेकस्तु वज्रज्ञानस्वभावः। अत्र च पञ्चाभिषेकः पञ्चसु लोचनादिविद्यायाः व्यापारात्। अत्र च 20 अविद्यामलक्षालनाय अक्षोभ्यरूपेण वज्राचार्य्येण वैरो-चनरूपावलम्बिनि शिष्ये सलिलाभिषेको देयः। एवं सर्व्वत्राहङ्कारः, आगामिबुद्धभावो अचिन्तोष्णीषबीजभूतो

मुकुटाभिषेकः। द्वादशाङ्गुलिपरिमाणेन द्वादशाङ्गप्रतीत्य-
समुत्पादविशुद्धा वज्रम्। यच्च मध्यवृत्तेर्निरुत्तरधर्म्मता-
सूचको हूँकारः [२३क]। तस्यार्थः, ह इति हेतुवियुक्तः [ऊ]
इति ऊहापगतः, अँ इति अप्रतिष्ठितसर्व्वधर्म्म इति। यच्च
5 भवसरोज[व]मुखात् स्फुरन्ति पञ्चाररूपिणो मुनयः पञ्च-
स्कन्धविशुद्धा निष्क्रान्ता भवशरीरेण। इह च मध्या-
राभिमुखत उपर्य्यधरेण सर्व्वे रूपादयो विज्ञानात्मका इति
सूच्यन्ते। एते च सर्व्वे सर्व्वात्मका इति निवे[द]यितुं
सर्व्वत्रैव चतुरस्रौ। अथ ते धर्म्मस्य बुद्धा हूँनादनि-
10 वेदितात्मरूपस्य पञ्चासिविमुक्तकायाः पर्य्यन्ते चान्यत्र
विस्फुरिता शून्यतानिमित्ता[ः] प्रणिहि(हि)ततावबोधनार्थं
सर्व्वत्र हुल्लिकात्रयम्। एते च आदर्शसमताप्रत्यवेक्षणाकृत्या
नुष्ठानसुविशुद्धधर्म्मधातुलक्षणपञ्चज्ञानात्मका गुरूपदेशतो
ज्ञेयाः। अभेद्यज्ञानसूचकं च समुदायार्थः—

15 दृढं सारं असौशीर्य्यं अच्छेद्याभेद्यलक्षणम्।
अदाहि अविनाशि च शून्यता वज्रमुच्यते॥

अभेद्यं वज्रमिति हेवज्रे। अस्य च वज्राभिषेकस्य
विधानं उत्पश्यमाना[२३]भेद्यज्ञानबीजाधानमिव विधातुं
एवं वज्रघण्टाऽपि पूर्व्वाभिसन्धानेन द्वादशाङ्गुलिपरिमाणा
20 अधोमुखाम्भोजवज्रसमापत्तिनिःस्वभावेन सर्व्वधर्म्मस्वभावं
प्रतिपादयितुं अभेद्यज्ञाननिगदतां धर्म्मोदयस्य बोधयितुं
मूर्द्धाधोभागे च वज्रावलीयुगलमालिनी। त्रिधातुक-
स्वभावकूटागारतामस्य ख्यापयितुं हारार्द्धहारप्रकार अत
एव पञ्चतथागताङ्कितः शून्यताकरुणाभिन्नज्ञानकारणतां
25 आवेदयितुमपरि[णत]प्रज्ञामुखाख्यानम्। अस्य च धर्म्म-
धातुस्वरूपस्य ज्ञानस्य वैरोचनादिपञ्चतथागतात्मकतां च

रूपादिपञ्चस्कन्धस्वभावतां च पृथिव्यादिपञ्चधातुरूपतां च कथयितुं ऊर्द्धं पञ्चारविरचना। अत्रापि मध्यस्थिताराभिमुखाद्यभिसन्धानं पूर्व्ववत्। अथाभिषेकमनया स्वनन्त्या वज्रघण्टया कुर्व्वीत। अनुत्तराशेषधर्म्मबोधाद् 5 विकारकं इह प्राधान्यख्यापनाय हेतुकताप्रतिपादनाय च [२४क]कारणभूतमपि वज्रघण्टाभिषेकमुल्लङ्घ्य प्रथमं वज्राभिषेकदानम्। सर्व्वधर्म्मा नामता इति प्रतिपादनार्थं भविष्यन्मुनीन्द्रपदोचितनामनिदानावदानार्थं च पूर्व्वनामव्यपनयेन स्वदेवताकुलगोत्रानुसारेण नामाभिषेकः। 10 आचार्य्याभिषेकश्च वज्रसमय-घण्टासमय-मुद्रासमय-भव्यतानुज्ञा-व्रतव्याकरणाश्वासलक्षणः। इत[ः] प्रभृति असंस्कृतो भेदयुगनद्धबाहिबो[धि]धर्म्मसमयस्त्वं इति बोधयितुं वज्रसमयः, चतुरशीतिधर्म्मस्कन्धसहस्रपरस्त्वमिति प्रतिपादनाय घण्टासमयः, स्वेष्टदेवतास्वभावस्त्वमिति 15 ख्यापयितुं मुद्रासमयः। मण्डलतत्त्वं मण्डलविशुद्धिलक्षणं देवतातत्त्वं देवताविशुद्धिलक्षणं आचार्य्यपरिकर्म्म च मण्डलसाधनज्ञानं पञ्चप्रदीपं चामृतभक्षणं च भव्यतातत्त्वं च नैःस्वाभाव्यमेषामुत्पन्नक्रमपक्षतः धर्म्मचक्रप्रवर्त्तनार्थमनुज्ञा। बाह्यव्रतनिराकरणार्थं वज्रव्रतदानं [२४] 20 पृथिव्यादिस्वभावतासूचनाय व्याकरणम्। तथा हि भुवो धरादे[ः] स्वः स्वरूपं भूर्भूया इति हि भूर्भुवःस्वरित्यस्यार्थः। सर्वावरणविनिर्मुक्तः सर्व्वबुद्धबोधिसत्त्वसम[य]स्त्वं इतः प्रभृति बोधनार्थमाश्वासः।

प्रज्ञाश्रद्धाक्षेत्रीकरणार्थं समयरक्षणार्थं च समानकालो- 25 भयसम्बन्धादितबोधिचित्तप्रदानं गुह्याभिषेकः। प्रज्ञोपाय-गुह्याभ्यां दीपयत इति व्युत्पत्तिः। प्रज्ञाज्ञानमित्यत्र

व्युत्पत्तिद्वयम् ; प्रज्ञया ज्ञानम्, प्रज्ञैव वाह्यज्ञानम् । तच्च ग्राह्यग्राहकाकारधारणी बुद्धिश्चतुर्धातुपञ्चस्कन्धस्वरूप-षड्विषयात्मकाङ्गनास्वभावा प्रज्ञा । तस्या निमित्तभूताया बोधिचित्तज्ञानमिति पूर्व्वा व्युत्पत्तिः । आकारद्वयशून्या 5 सैव विज्ञानमित्यपरा व्युत्पत्तिः । प्रज्ञाज्ञानलक्षितसप्ताङ्ग-युक्तसाध्यं चतुर्थार्थमित्येके । प्रज्ञाज्ञानमेव अभ्यस्यमान-शरदमलगगनसङ्काशं चतुर्थार्थमित्यपरे । प्रज्ञाज्ञानमेव प्रकृतिरूपं विकाररूपं प्रकृतिसमुत्पादात्मकं [२५क] युग-नद्धाद्वयवाहिसुविशुद्धस्वभावं चतुर्थार्थमित्यपरे । पक्षा-10 न्तराणि च विस्तरभया न्नोच्यन्ते । अतिगुह्यसेकसंग्रह-विधानमिलितेन पुण्ययुतस्तो[के]न निखिलजगतोऽस्तु विमलस्फुटसुगतसुभाषिते क्षान्ति[ः] ।

॥ समाप्तश्चायं सेकतान्वयसंग्रह इति । कृतिरियं पण्डितावधूतश्रीअद्वयवज्रपादानामिति ॥

# ८। पञ्चाकारः।

नमो बुद्धाय।

वज्रसत्त्वं नमस्कृत्य निष्प्रपञ्चमनुत्तरम्।
पञ्चाकारमहं वक्ष्ये समाक्षिप्य [च] बोधये॥

ॐ आः हूँ इत्यनेन स्थानात्मयोगरक्षां कृत्वा सुगन्धादिलिप्तभूभागे चतुरस्रादिमण्डलमध्ये पञ्चतथागताः
5 पञ्चयोगिन्यः पूजनीयाः। तत्र मध्ये विश्ववर्णपँकारपरिणतविश्वाष्टदलविकसितकमलवरटकोपरि रक्तरेफपरिणतसूर्य्यमण्डलस्थनीलहूँकारनिष्पन्नो द्विभुज एकमुखो भूस्पर्शमुद्राधरो वज्रपर्य्यङ्की द्वात्रिंशल्लक्षणाशीत्यनुव्यञ्जना[२५]लङ्कृतशरीरो दशबलवैशारद्यादिगुणगणैकनिलय[ः]
10 सौशीर्य्यमांसास्थिरहितः प्रतिभासमात्रदर्पणप्रतिबिम्बसमो न सत्यं न मृषा अतिमैत्र्यात्म्यकत्वात् कृष्णवर्णः कृष्णवज्रचिह्नः सुविशुद्धधर्म्मधातुविज्ञानस्कन्धस्वभावः शिरस्तुण्डमुण्डितकाषायावगुण्ठितविग्रहः वज्रसत्त्वाङ्कितशिराः वज्रसत्त्वस्वभावः शिरस्तुण्डमुण्डितकः, अतएव हेतुफला-
15 त्मकः, सर्व्वाकारवरोपेतशून्यतालक्षणः, असंस्कृततथागतात्मकत्वात् धर्म्मकायः, प्रतिभासमात्रत्वात् सम्भोगकायः, कल्पितनिर्म्माणकार्यं निर्म्माणकायः, कायचित्तयैकरसत्त्वात् स्वाभाविककायः। तदुक्तम्—

असंस्कृतमनोधर्म्मः चोप(ः)सम्भोगलक्षणः।
20 तदेव निर्म्मितं चित्तं बीजः सर्व्वस्वभावतः॥

इति विकल्पादेरस्पृश्यत्वात् वज्रकुली—वज्रकुलश्च लोकैः न स्पृश्यते—द्वेषवज्रश्च शिशिरमध्याह्नकटुश्रुति-

आकाशशब्दचवर्गौ अक्षोभ्यविशुद्धौ [२६क] असौ वाह्या-
ध्यात्मिकव्यवस्थेयमिति कायचतुष्टयव्यवस्था चात्रापि
पूर्व्ववत्। आः वज्रधृक् हूँ अस्य जापमन्त्रः।

वज्रसत्त्वस्तु हूँकारजन्मा शुक्लो द्विभुज एकवक्त्रो वज्र-
5 वज्रघण्टाधरो मनःस्वभावः काषायरसशरीरः शरदृतु-
विशुद्धो यरलवाद्यात्मकः अर्द्धरात्रतः प्रभातकालपर्य्यन्तो
धर्म्मधातुपरनामा।

अतः पूर्व्वदले चन्द्रमण्डलोपरि ॐकारजः शुक्लवर्णो
वैरोचनः शुक्लचक्र(वज्र)चिह्नः बोध्यग्रीमुद्राधरः रूपस्कन्ध-
10 स्वभावः मोहस्वरूपो विटविशुद्धः तथागतकुली आदर्शत्वेन
प्रतिष्ठितः हेमन्तऋतुविशुद्धः मधुररसशरीरः कवर्गव्यापी
प्रभातसन्ध्यात्मकायस्वभावः। ॐ आः जिनजिक हूँ
[इ]त्यस्य जापमन्त्रः।

दक्षिणदले सूर्य्यमण्डलोपरि त्राँकारजः पीतवर्णो
15 रत्नसम्भवो रत्नचिह्नवरदमुद्राधरो [२६] वेदनास्वभाव-
पिशुनशरीरः रक्तात्मको रत्नकुली समताज्ञानवान् वसन्त-
ऋतुरूपलवणशरीरः टवर्गव्यापी तृतीयचतुर्थप्रहरात्मकः।
ॐ आः रत्नधृक् हूँ अस्य जापमन्त्रः।

ततः पश्चिमदले रविमण्डलोपरि रक्तह्रीःकाँरसम्भूतो
20 रक्तवर्णोऽमिताभः पद्मचिह्नः समाधिमुद्राधरः संज्ञास्कन्ध-
स्वभावो रागशरीरः शुक्रात्मकः पद्मकुली प्रत्यवेक्षणाज्ञान-
लक्षणो ग्रीष्मऋतुरूप आम्लरस[श]रीरः तवर्गात्मा प्रदोष-
वान्। जापमन्त्रश्चायं ॐ आः आरोलिक हूँ।

तत उत्तरदले सूर्य्यमण्डलोपरि श्यामखँकारजः [श्याम-
25 वर्णोऽमोघसिद्धिः विश्ववज्रचिह्नाभयमुद्राधरः संस्कार-
स्कन्धस्वभावो वर्षाऋतुरूपः] पिशितापः तिक्तरसात्मकः

पवर्गविशुद्धः अर्हद्राजस्वभावः। अस्य च मन्त्रः ॐ आः प्रज्ञाधृक् हूँ इति।

एते वज्रपर्य्यङ्किनः द्विभुजै[क]वक्त्राः सोष्णीषशिरतुण्ड-मुण्डित[२७क]काषा[य]ावगुण्ठित-द्वात्रिंशल्लक्षणाशीत्यनु-
5 व्यञ्जनालङ्कृत-दशबलवैशारद्यादिगुणगणैकनिलयाः सौ-शीर्य्यमांसास्थिरहिता दर्पणप्रतिबिम्बोपमा न सत्यासत्या-दिसङ्कल्पनापगमविमलप्रतिभासमात्रकसम्भोगविग्रहाः कायचित्तयैकरसतास्वाभाविककायमुपादाय असंस्कृत-तथात्मकर्म्मकायकल्पितविज्ञानकायाव्यभिन्ना रूपवेदना-
10 संज्ञासंस्कारस्कन्धात्मका वैरोचनरत्नसम्भवामिताभामोघ-सिद्धयो विज्ञानमात्रता इति प्रतिपादनाय अक्षोभ्येन मुद्र्यन्ते इति। अक्षोभ्याङ्कितशिरसि विज्ञानस्य नै[ः]स्वा-भाव्यस्य शून्यताकरुणयोस्तादात्मक[त्वं] च प्रतिपादयितुं अक्षोभ्योऽपि वज्रसत्त्वेन मुद्र्यते। एतेन हेतुफलात्मकं
15 भवनिर्व्वाणैकरसतामात्रं जगदिति प्रतिपादितं भवति।

तथा च—

शून्यताकरुणाभिन्नं यत्र चित्तं प्रभाव्यते।
सा हि बुद्धस्य धर्म्मस्य सङ्घस्यापि हि[२७]देशना॥
गुडे मधुरता चाग्नेरुष्णत्वं प्र[कृ]तिर्यथा।
20 शून्यता सर्व्वधर्म्माणां तथा प्रकृतिरिष्यते॥

तथा च—

भवस्यैव परिज्ञानं निर्व्वाणं इति कथ्यते।

आग्नेयकोणदले चन्द्रमण्डलोपरि शुक्ललोँकारजा शुक्ल-वर्णा लोचना चक्रचिह्ना पृथ्विधातुस्वरूपा तथागत-
25 कुलोद्भवा मोहरक्ता। अस्या बीजं ॐ आः लोँ हूँ स्वाहा इति।

नैर्ऋत्यां चन्द्रमण्डलोपरि कृष्णमाँकारबीजसम्भूता मामकी कृष्णवर्णा कृष्णवज्रचिह्ना अब्धातुस्वभावा वज्रकुला द्वेषरक्ता। अस्या बीजं ॐ आः माँ हूँ स्वाहा इति।

5 वायव्यां चन्द्रमण्डलोपरि पाँकारबीजसम्भूता पाण्डरवासिनी रक्ता रक्तवर्णा पद्मचिह्नतेजोधातुस्वरूपा पद्मकुला रागरक्ता। अस्या बीजं ॐ आः पाँ हूँ स्वाहेति।

ऐशान्यां चन्द्रमण्डलोपरि कनकश्यामताँकारपरिणता तारिणी श्यामवर्णा श्यामनीलोत्पलचिह्ना वायुधातु-

10 [२८क]स्वरूपा कर्म्मकुला ईर्षारक्ता। अस्या बीजं ॐ आः ताँ हूँ स्वाहा।

एता[ः] चतस्रः षोडशाब्दिका असाधारणरूपयौवनशालिन्यो यथाशोभसंस्थिता पूर्व्ववत् कायचतुष्टयात्मिका मनोह्लादिन्यः सकलजिनगुणाधारभूताः पञ्चतथागत-

15 स्वरूपाः। आसां(अस्यां) मध्ये आलिस्वभावा वज्रसत्त्वस्वरूपिणी वज्रधात्वीश्वरी नायिका। इयमेव भगवती तथता शून्यता प्रज्ञापारमिता भूतकोटिनैरात्म्येति व्यपदिश्यते।

न ग्रन्थः कृतिकौशल्यमापादयितुमेष मे।

20 प्रयत्नः किं च संक्षिप्य बोधयेयं शिशून् इति॥

इति विधिवदुदीर्य्यसत्त्वहेतोः

सकलजिनागमयुक्तिसङ्गतं हि।

अखिलमिहशुभं समाप्तं

भवतु ततो जिन एष वज्रसत्त्वः॥

25 ॥ पञ्चाकारः समाप्तः॥

# ९। मायानिरुक्तिः।

नमः सर्व्वविदे।

मायेव निःस्वभावं चेत् जगदध्यक्ष[ं]बुधाः।
किमर्थमिह मुह्यन्ति जानन्तो(न)ऽपि सुखासु या (!)॥
मायावी [२८] कुरुते मायां ज्वलदाकारभास्वराम्(रं)।
कस्यचित् सत्यमाभाति माया मायैव तद्विदः॥
5 मायातुष्टेर्विनाभोगं ये कामाः स्वयमागत[ाः]।
मायया तानसौ भुंक्ते यन्माया सर्व्वसंगता॥
शून्यतो जायते धर्म्मस्तस्मादन्या न धर्म्मता।
अतएव हि सार्व्वज्ञ्यं बुद्धस्य न विहन्यते॥
अनारोपवशात् सर्व्वं धर्म्मचक्रं प्रवर्त्तते।
10 पादप्रसारिकां त्यक्ता क्षिप्त्वा मानादिकल्पनाम्॥
चर्य्यया विचरेद् योगी सुस्थितः स्थानयोगतः।
खान-पान-रसं प्राप्य शुद्धमुद्घुष्य भाषया॥
चर्य्यां न विचरेत् यस्तु नासौ सम्बोधिभाजनः।
वाचा वक्ति जनस्तत्त्वं चर्य्यामप्यनुमोदते॥
15 वित्त्यनुष्ठानसम्पत्त्या सम्पन्नो वल्लभो जनः।
मही शय्या दिशो वासो भिक्षाभक्तं च भोजनम्॥
अजातधर्म्मता क्षान्तिः कृपानाभोगवाहिनी।
जनजन्मनि (ज) ये धर्म्मा जायन्ते तेऽपि चर्य्यया।
एतत् फलमिहाप्य[स्ति] क्षमा ता(स्ता)वदनुत्तरा॥
20 मायां विहृत्य यत्पुण्यं सुलब्धं साधुचेतसा।
तेनाद्वैतपदं यान्तु [लोका] लोकोत्तरे स्थित[ा]ः॥

॥ मायानिरुक्तिः समाप्ता इति [२९क]॥

# १० । स्वप्ननिरुक्तिः ।

नमः सर्व्वज्ञाय ।

विनयेष्वभि(सुवा)धर्म्मेषु सूत्रेषु जिनपुङ्गवैः ।
धर्म्मा[ः] स्वप्नोपमा[ः] ख्याता विस्पष्टार्थं तत् कथ्यते ॥
स्वप्नं सत्यमसत्यं वा [ - - - - ]विद्वेव वा ।
माया यथा प्रतिष्ठानं सतां किमिह सम्मतम् ॥
5 स्वप्न[ः] सत्यमबोधेन तद्बोधे या(व)त्यलीकताम् ।
प्रथमे [तु] स्वत[ः] ज्ञानं द्वितीये नास्तिता भवेत् ॥
प्रबोधात् कल्पिता योऽहं नानुभूतिरपोह्यते ।
सच्चित्प्रकाशात्मा यद्य[द]स्त्यनुभवो महान् ॥
क्षणध्वंस्यालयात् मौलात् प्रवृत्तिभ्यो विचित्रता ।
10 ताश्च तत्र तदाकारा चिद्देशितं तदिष्यते ॥
स्वप्नात् स्वप्नं यदेव स्यात् चिच्चित्रालीकता तदा ।
नैव सत्यं असद्वित्तेर्न चोच्छेदः प्रकाशतः ॥
किमन्यन्निकृतं नाम [ना]म्नो मायेति वा कृतम् ।
नाम्नि न युज्यते नाम अप्रतिष्ठा त्वनामनि ॥
15 षट्निवहद्वितयं [च] चत्वारो बोधये मताः ।
स्वप्नतुल्यमिदं विश्वमित्यमुक्तं जिनोत्तमैः ॥
किं व्याख्यानमतो विद्धि बुद्धसर्व्वस्वमुत्तमम् ।
सम्बित्त्या सद्गुरोर्यत्नात् चर्य्यया च विशेषतः ॥

॥ स्वप्ननिरुक्तिः समाप्तेति । [२९] ॥

---

# ११। तत्त्वप्रकाशः

नमो बुद्धाय।

प्रज्ञोपायात्मकं वन्दे बुद्धत्रिकायरूपिणम्।
प्रभावात् ज्ञायते यस्य भवनिर्व्वाणमुत्तमम्॥
केशोण्डूकं यथाकाशे तैमिरो मनुते जनः।
केशोण्डूकमहं वक्ष्ये हन्ताकाशनिराकृतम्॥
5 शुद्धदृष्टिस्तदा [भू]यान्नेति भ्रान्ता मतिस्तव(ः)।
तैमिरभ्रान्त्यपोहाय पृष्टो नेत्युक्तवान् असौ॥
प्रकाशेतरशून्यत्वात् विध्यपोहौ न तत्त्वतः।
एवमनास्रवाद् धर्म्मात् सत्त्वार्थस्तु प्रवर्त्तते॥
भोगनिर्म्माणकायाभ्यां प्रतीत्यप्रणिधानतः।
10 तौ च तस्मात् न भिन्नौ च तयोस्तु तत् स्वभावतः॥
तादात्म्यं निजं सिद्धं स्यात् भेदश्चित् सङ्गहानये।
नेष्यते यद्यनुत्पादो भिन्नो व्यावृत्तितो भवेत्॥
योगाचारमता[द]न्यो मध्यमार्थः कथं भवेत्।
चतुष्कोटिप्रहाण्या चेत् मध्यमार्थो विशिष्यते॥
15 विज्ञानेऽपि प्रसङ्गः स्यात् तासां अत्रापि हानितः।
चतुष्कोटिविनिर्मुक्तं ज्ञानं वस्तु [३०क] समुच्छ्रयम्॥
कल्पशून्यमनालम्ब्यं विदुर्विज्ञानवादिनः।
भूतकोटेरतो विश्वं प्रतीत्यैव प्रजायते॥
वस्तुशून्यमजातं तु केवलं नाममात्रकम्।
20 भेदेनाख्या[न]सर्व्वज्ञः स्वाधिष्ठानप्रभास्वरौ॥

